## नाकारपरौ ॥ १३ ॥

द्विवचनसामर्थ्यगृहीतौ(१) सन्निहितावेकारौकारौ अकारपरौ पूर्वविधिं नाप्नुतः(२)। यथा, मा ते अस्यां। समिद्धो अञ्जन्। तेऽब्रुवन्। इत्यादौ एकारोयं, लुप्यते लकार एकारपूर्व इति(३) सूत्रद्वयं प्रसक्तं। तत्रापि पूर्वत्वात् प्रबलं यत्वविधिं निषेद्धुमयमारम्भः। अकारः परो याभ्यां तावकारपरौ॥

## ऐकार आयं ॥ १४ ॥

स्वरपरः पदान्त ऐकारः, आयं विकारमापद्यते। यथा, आशामहा एवेमौ द्वादशौ मासौ॥

## औकार आवम् ॥ १५ ॥

औकारः पदान्तः(४) स्वरपर आवं विकारमापद्यते। यथा, अहावनद्‌ता हते॥

## उकारोऽपृक्तः प्रकृत्या वकारोऽन्तरे ॥ १६ ॥

अपृक्तसञ्ज्ञक उकारः स्वरपरः प्रकृत्यावतिष्ठते। अविकृतो भवतीत्यर्थः। उकारस्वरयोरन्तरे वकारस्यागमो भवति। यथा, स उ एकविंशवर्त्तनिः। अदन्त्युवेवास्य मनुष्याः। अपृक्त इति किं। स्वपत्याय देव। उकार इति किं। भिन्धीहि(५)॥

---

१ द्विवचनसामर्थ्यादिति ख०, ग० च।

२ न प्राप्नुत इति इ० मु०।

३ पूर्वं ओकार इतीति ख०।

४ पदान्ते इति ग०।

५ भन्धेहि इति ख०, ग०, इ० मु० च।

## न तत् तस्मात् साꣳहितः ॥ १७ ॥

तत्,तस्मात्, इत्येताभ्यां संहित उकारोपृक्तः पूर्वविधिं न भजते(१), प्रकृत्या अवस्थानं, वकारागमश्च(२) न भवतीत्यर्थः। (३)तद्वाहुरुत्सृज्य। तस्माद्वाग्य। इवर्णोकारौ यवकाराविति द्वयमेऽस्य विधिर्वक्ष्यते(४)। तत् तस्मात् साꣳहित इति किं। तत्, उ, आहु, तदु, उवाहु,(५) तस्मादु, उवाग्य ॥

## ह्रस्वपूर्वो ङकारो द्विवर्णं ॥ १८ ॥

स्वरपरो ङकारः पदान्तवर्त्ती ह्रस्वपूर्वो द्विवर्णं द्वित्वं भजते(६)। यथा, न्यङ्ङग्निः त्वा दध्यङ्ङृषिः। ह्रस्वपूर्व इति किं। पराङावर्त्तते। स्वरपर इति किं। सहङ्क् समानैः प्रत्यङ् षडहः(७)। ह्रस्वः पूर्वो यस्मादसौ ह्रस्वपूर्वः। द्वयोर्वर्णयोः समाहारः, द्विवर्णं ॥

## नकारश्च ॥ १९ ॥

'च'कारः पूर्वनिमित्तं द्वित्वं चान्वादिशति(८)। ह्रस्वपूर्वो नकारो द्विवर्णं भजते स्वरपरः। निरवपन्निन्द्राय। अभुव-

---

१ नाप्नोतीति ग०, इ० मु० च। न प्राप्नोतीति ख०।

२ वकारश्चेति ग०, इ० मु० च।

३ अत्रसमादिन इति ख०, चिह्नितोऽधिकः पाठः।

४ द्वयमे तस्य विधिर्वक्ष्यते इति ग०। उकारस्य विधिर्वक्ष्यते इति ख०।

५ आउवाहृज्यमिति ख०, ग० चिह्नितपुस्तकेऽधिकः पाठः।

६ द्विवर्णं भजते इति ग०,इ०मु० च।

७ प्रत्यङ् षडह इति ग०।

८ चाकर्षतीति ख०।

नृध्नुवत्। एवम्पर इति किं। निरवपन् यान्येव पुरस्तात्(१)। आमन्वतीते(२)। एवम्पूर्व्व इति किं। यानम्नयोन्वतप्यन्त। विद्वानेतमग्निं चिनुते॥

**अनितिपरो ग्रहोख्ययाज्यापृष्ठ्यहिरण्यवर्णीयेष्वीकारोकारपूर्वो रेफमाकारपूर्वश्च यकारम्॥ २०॥**

ग्रहोख्यादिषु विषयेषु ईकारपूर्व्व ऊकारपूर्व्वो वा चकारात्क्लिष्टो नकार इतीत्येतस्मादन्यस्वरपरो(३) रेफमापद्यते, आकारपूर्व्वश्चेद्यकारं। ग्रहो नाम चतुरोन्त्यानुवाकान्(४) वर्जयित्वा आददे ग्रावेति प्रश्नः, अग्निकाण्डस्याद्यं प्रश्नद्वयम्, उत्तमानुवाकवर्जम्, उख्यम्, इत्याख्यायते(५)। उक्ता याज्याः, समिद्दिशां जीमूतस्य, यदक्रन्दः, मा नो मित्रः, ये वाजिनम्, अग्नेर्मन्वे, समिद्धो अञ्जन्, गायत्री, कस्त्वा, इत्यनुवाकनवकं पृष्ठ्यमिति पठ्यते(६)। हिरण्यवर्णा इत्यनुवाकः(७) हिरण्यवर्णीयः। ग्रहे यथा(८), जहि शत्रूꣳ रपमृधः, मरुत्वाꣳ इन्द्रः(९)। उख्ये यथा, ये वा वनस्पतीꣳ रनु, मधुमाꣳ अस्तु सूर्यः। याज्यासु

१ पुरस्ताद्दर्शासीति ग०।

२ ओमन्वतीतेस्मिन्निति ख०, ग० च।

३ नकारः, अनितिपर इति भिन्नस्वरपर इत्यर्थः। इतीत्यस्मादन्यस्वरपर इति ख०। नकारोनितिपर इतिशब्दातिरिक्तस्वरपर इति इ० मु०।

४ चतुरस्नुवाकान् इति ग०। चतुरोनुवाकानिति इ० मु०।

५ उत्तमानुवाकवर्जितमुख्यमित्युच्यते इति ख०। उत्तमानुवाकवर्जमुख्यमाख्यायते इति ग०, इ० मु० च।

६ पृष्ठ्यमित्युच्यते इति ख०।

७ इत्यनुवाके इति ग०।

८ ग्रहो यथेति ख०, ग० च।

९ मरुत्वां इन्द्र वृषभ इति ख०, ग० च।

यथा, ऋतूꣳ ऋतु पते(१) अमवाꣳ इभेन। पृष्ठे यथा, यज्ञूꣳ रनपव्यथन्तः, जघमाꣳ(२) उपजिघ्रते। हिरण्यवर्णीये यथा, अग्निꣳ रप्सु षदः सर्व्वाꣳ अग्नीन्। अनितिपर इति किं। अभ्यवर्त्तन्त दस्यून्, दस्यूनिति दस्यून्। इडावानितीडावान्। अह्वादिष्विति किं। चोनिमाꣳ लोकानिति। पशूनेवावरुन्धे। तानिन्द्रोन्तर्य्यामेणान्तरधत्त। इतिपरो यस्मादसाविति परः, न इति परः, अनितिपरः॥

**मर्त्यानुदयानमृतान्दुर्य्यानसोमपूर्वःसोऽस्मानविमान्-गोमान्मधुमान्हविष्मान्छतमनार्षेचिकित्वानिडावान्कक्षी-वान्वाणवान्हिपयस्वान्वशान्विद्वानमित्रानरान्पोषान्म-हाꣳश्च॥२१॥**

मर्त्यान्, उदयान्, अमृतान्, दुर्य्यान्, असोमपूर्व्वः सो अस्मान्, अविमान्, गोमान्, मधुमान्, हविष्मान्, छतमनार्षे, चिकित्वान्, इडावान्, कक्षीवान्, वाणवान्, हि पयस्वान्, वशान्, विद्वान्, अमित्रान्, अरान्, पोषान्, महान्, एतेषु ग्रहणेषु नकारोऽनितिपरो यकारमापद्यते। अनितिपरत्वाकर्षकोयं 'च'कारः। विषयानमाहत्य सर्वार्थोयमितः परमारम्भः(३)। यथा, मर्त्याꣳ आविवेश। उदयाꣳ अजस्रं। उदिति किं। वयोभिरेवायानवरुन्धे। उदस्याममृताꣳ अनु। भद्रान्दुर्य्याꣳ

---

१ ऋतूं ऋतुपते यजेचेति ख०। 
२ जघन्यां उपजिघ्रते इति ग०। 
३ सर्वार्थोयमित्ययमारम्भ इति ग०।

अभ्येहि। न सोमपूर्वः, दुर्य्याम्, इत्यत्र नकारः सोमपूर्वो यत्वं नापद्यते। प्रचरा सोम दुर्य्यानदित्याः। सो अस्माꣳ अधिपतीन् करोतु। सो इति किं। इन्द्रो अस्मानस्मिन्[१]। अविमाꣳ अश्वी। गोमाꣳ अग्ने। मधुमाꣳ इन्द्रियावान्। अविगोमध्विति किं। पशुमानेव भवति। हविष्माꣳ आविवासति। ऋतमानार्षे, ऋतमानित्यत्र नकार आर्षे स्वरपरे यत्वं भजते[२]। देवऋतमꣳ इत्युखायां[३]। आर्ष इति किं। देवऋतमानिति देवऋतमान्। आर्षग्रहणसामर्थ्यादितिपरत्वेपि यत्वं भवति। आर्ष इति काकाक्षिवदुभयत्र[४] सम्बध्यते, ग्रहोष्यादिमहान्पर्य्यन्तं। आर्षः स्वयम्पाठ इत्यर्थः। चिकित्वाꣳ अनुमन्यतां इडावाꣳ एषः। कक्षीवाꣳ औशिजः। विश्वल्यो बाणवाꣳ उत। इडाकक्षीवाणेति किं। करोति रसवानेव भवति[५]। असृक्ष्महि पयस्वाꣳ अग्ने[६]। ह्वीति किं। ऊर्जस्वान् पयस्वानित्याह। आर्ष इतिपरत्वाद् देवऋतमाꣳ इत्युखायां जुहोतीतिवद्यत्वप्राप्तिर्हिंग्रहणेन प्रतिषिध्यते[७]। स्तुतो यासि वशाꣳ अनु। सुविदत्राꣳ अपि[८]। अमित्राꣳ अपबाधमानः। अराꣳ इवाग्ने[९]। पोषाꣳ अपुष्यन्। अग्ने महाꣳ असि॥

---

१ यस्मानस्मिन्निति ख०।

२ आर्षे स्वरपरे यत्वं भवति इति ग०। आर्षस्वरपरे यत्वं भजते इति ख०। आर्षे स्वरे परे यत्वमापद्यते इति इ० मु०।

३ इत्युखायां जुहोति इति ख०।

४ काकाक्षिन्यायेनोभयत्रेति इ० मु० पुस्तकधृतपाठान्तरम्।

५ करोतीति ग० चिह्निते नास्ति।

६ अग्न आगममिति ख०।

७ निषिध्यते इति ग०,इ० मु० च।

८ सुविदत्रा अपि तयमनेति ख०।

९ स्वाग्ने नेमिर्देवानिति ग०।

इन्द्रोमेऽकऌढ्मिद्दाघ्येत्वगन्मेडेन्यानायजिष्ठयाचत्वर्कुर्व-न्तादुहदितिरग्रेऽधरान्त्सपत्नानलम्परश्च॥ २२॥

इन्द्रो मे, अकः, जठ्ठ, इद्दा, अध्येतु, अगन्म, इडेन्यान्, आयजिष्ठ, आच, ऋतु, अकुर्वत, अदुहत्, अदितिः, अग्रे, अध-रान् सपत्नान्, अलं, इत्येवम्परो नकार आकारपूर्वो यकार-मापद्यते(१)। 'च'कार आकारपूर्वत्वाकर्षकः। यथा, सपत्नाँ२ इन्द्रो मे। मे इति किं। युष्मानिन्द्रो वृणीतः। नियाभिणाधराँ२ अकः। यूयं देवाँ२ जठ्ठम्। अग्ने देवाँ२ इहावह। दीर्घेण किं। यज्ञियानिह यान् हवामहे। यज्ञो देवाँ२ अध्येतु। एत्विति किं। विद्दानपि जन्येषु(२)। सुवर्देवाँ२ अगन्म। इडामहै देवाँ२ इडेन्यान्। देवाँ२ आयजिष्ठ स्वस्ति। देवाँ२ आवच-क्षत्। यजिष्ठश्चेति किं। यानावह उशतः। वाजी देवाँ२ ऋतुभिः,(३)। वि त्वा कामाँ२ अकुर्वत। यज्ञोऽसुराँ२ अदुहत्। विवस्वाँ२ अदितिः। अग्निस्ताँ२ अग्रे। अन्याँ२ अधरान् सपत्नान्। सपत्नानिति किं। भ्रातृव्यानधरान् पादयामि। पुरोडाशाँ२ अलङ्कुर्विति। अन्वादेशः किमर्थः। परिधीनकुर्वत। तत्तत्पदग्रहणे कर्तव्ये परपदग्रहणम्, अनार्षेपि संहिताविधान-ग्रहणस्य च(४) यत्नं स्यात् इति, नैमित्तिकस्य च निमित्ता-पेक्षत्वात्। ग्रहणस्य यथा, अमर्त्यो मर्त्याँ२ आविवेश, आवि-

---

१ यत्वमापद्यते इति अ०, इ० मु० च। ३ येभिर्देवा ऋतुभिरिति अ०।

२ अन्येषु भवतीति अ०। ४ संहिताविधानग्रहणस्य चेति इ० मु०। संहिताविधानस्य चेति अ०।

वेशामर्त्यां॑ऌ अमर्त्य आविवेश। उदस्थाममृतांऌ अनु, अमृतांऌ अन्वमृतांऌ अनु। एवं नैमित्तिकग्रहणस्य। अग्नेविमांऌ अविमांऌ अग्ने(१)। उदयांऌ अजस्रं, उदयांऌ अयांऌ उदयान्(२)। एवं ग्रहणस्य नैमित्तिकस्य(३)। अग्निस्तांऌ अग्ने तांऌ अग्निः। अन्यांऌ अधरान्, अन्यांऌ अधरांऌ अधरांऌ अन्यांऌ अधरान्(४)। एवं सर्वत्र नकारस्य यकारोत्पत्तिर्द्रष्टव्या॥

**न रश्मीन्नपयान्यमान्पतङ्गान्त्समानानर्वान्यजीयान्॥ २३॥**

रश्मीन्, अपयान्, यमान्, पतङ्गान्, समानान्, अर्वान्, यजीयान्, एषु(५) ग्रहणेषु नकारः स्वरपरोपि न खलु रेफं वा यकारं वा भजते(६)। यथा, पुरुषा च रश्मीननु। अदितिः अपयानिति। उष्मत्वादनयोः प्राप्तिः। ननु अदितिः अपयानित्यस्य(७) इति परत्वादेव निषेधे सति ग्रहणमनर्थकमिति-

---

१ अग्ने विमां अविमां अग्ने ग्ने विमान् अमृतां अन्वन्वमृतां अमृतां अनु इति ग०। अग्ने विमां अग्नी अविमां अग्ने इति क०। अग्ने विमां अग्नो अविमान् अग्ने तथा अग्ने-विमां अविमां अग्ने विमान् अविमा अग्ने इति ह० मु०।

२ उदया अजस्रं, अया अजस्रं, अजस्रमजस्रमया अया अजस्रं, उदया अया उदयान् इति ख०।

३ एवं ग्रहणनैमित्तिकस्येति ग०, ह० मु० च,

४ अग्निस्ता अग्ने ता अग्ने ग्ने तां तान् ता अग्निः। अन्या अधरान् सपत्नान् अन्या अधरानधरानन्या अन्या अधरानिति ख०। तां अग्ने ग्ने तांस्तां। अन्यां अधरां अधरानन्यां अधरान् इति ग०।

५ एतेष्विति ग०, ह० मु० च।

६ स्वरपरोपि रेफयकारं नापद्यते इति ख०। स्वरपरोपि न खलु रेफं यकारं वा भजते इति ग०, ह० मु०, च।

७ अपयानश्चेति ह० मु०।

चेत्। आर्षं इतिपरत्वात् पुनः प्राप्तिः। तस्माभूदिति ब्रूमः। सुयमानूतये[1], पृष्ठगत्वात् प्राप्तिः। पतङ्गानसन्दितः। याज्यात्वात् प्राप्तिः। समानानुसवम्ने। अर्वानिन्द्र ग्रावाणः। यज्ञीयानुपस्थे मातुः[2]। एषामपि सैव प्राप्तिः॥

## उदयापरश्चोदयापरस्य॥ २४॥

उत्, अथा, इत्येवम्परो नकारो यथाविहितं रेफं यकारं वा नापद्यते। यथा, अमित्रानुत्रयामि। उदिति किं[3]। वीँ३ कृतघून्। विद्वानथा भव। दीर्घोऽत्र ह्रस्वोपलक्षणमपि[4] यथा, विद्वानथा भव। यथासंहितास्थमेव निमित्तमत्र कार्य्यं[5] करोति निषेधरूपं। यथा, अमित्रानुदमित्राँ अमित्रानुत्। विधिरप्येवं। यथासंहितास्थनिमित्त एवं[6] सर्वत्र भवतीत्यवोचाम[7]। यथा, सो अस्माँ अस्मान्त् सो अस्मान्। अस्माँ अवहायावहायास्मानस्माँ अवहाय। एवमादि वेदितव्यम्॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे नवमोऽध्यायः॥ * ॥

---

१ सुयमानूतये इत्यत्रेति ख०।
२ यज्ञीयानुपस्थे मा तु इति ख०।
३ उदुत्मायेत किमिति ग०, इ० मु० घ।
४ यथेति ह्रस्वोपलक्षणमपि इति ख०।
५ निमित्तं स्वकार्यमिति इ० मु०। निमित्ते स्वकार्यमिति ग०। निमित्तमत्र स्वकार्यमिति ख०।
६ यथासंमितास्थनिमित्तैरेवेति ख०।
७ भवत्युतोवोचामेति ग०, इ० मु० घ।

## अथ दशमोऽध्यायः।

अथैकमुभे ॥ १ ॥

'अथ' इत्ययमधिकारः। उभे अक्षरे एकं रूपं सजातीयमापद्यते इत्येतदधिकृतं वेदितव्यं, इत उत्तरं यक्ष्यामः ॥

दीर्घं समानाक्षरे सवर्णपरे ॥ २ ॥

समानाक्षरे आत्मनः सवर्णपरे सति पूर्व्वापरीभूते एते उभे दीर्घमेकमाप्नुतः। यथा, ऋक्षीष्वान्तरितं(१)। राज्ञासीन्द्रियाग्नै(२)। सूपस्थादेवः(४)। सवर्णं परं यस्मात् तत्, सवर्णपरम्, तस्मिन् ॥

अथावर्णपूर्व्वे ॥ ३ ॥

'अथ' इत्ययमधिकारः। अवर्णपूर्व्वे सतीत्येतदधिकृतं वेदितव्यं, इत उत्तरं यक्ष्यामः। इदमधिकारान्तरम्, उपसर्गपूर्व्वं आरम्, इतिपर्य्यन्तं। अवर्णश्चासौ पूर्व्वश्च अवर्णपूर्व्वः, तस्मिन् ॥

---

१ लघं ऋक्षीष्वान्तरितं रथ इति ह० मु०। राज्ञासीन्द्राग्नी इति म०, ह० मु० च।

२ राज्ञासीन्द्राग्नी समस्तमिति ख०।

४ सूपस्था देवो वनस्पतिरिति ह० मु०।

## इवर्णपर एकारं ॥ ४ ॥

अवर्णपूर्वं इवर्णपरे च सति, उभे(१) अक्षरे एकारमाप्नुतः। मेष्टिर्भवति। (२), इवर्णश्चासौ परश्च इवर्णपरः, तस्मिन् ॥

## उवर्णपर ओकारं ॥ ५ ॥

अवर्णपूर्वं उवर्णपरे च सति, ते उभे(३) ओकारमाप्नुतः। इषे त्वोर्जे त्वा ॥

## एकारैकारपर ऐकारं ॥ ६ ॥

अवर्णपूर्वं एकारैकारे च परे सति ते उभे(४) पूर्व्वापरीभूते ऐकारमाप्नुतः। सं ब्रह्मणा पृच्यस्वैकताय(५)। सोमैन्द्राबभ्रुललामास्तूपराः। एकारश्च ऐकारश्च एकारैकारौ, तयोः समाहारः, एकारैकारं। समाहारे द्वन्द्वः। तच्च तत् परश्च एकारैकारपरं, कर्म्मधारयः। तस्मिन्, एकारैकारपरे। एवमुपरितनेपि सूत्रे समासः ॥

## ओकारौकारपर औकारं ॥ ७ ॥

अवर्णपूर्वं ओकारौकारे परे च सति, ते उभे(६) औकारमाप्नुतः। ब्रह्मौदनं पचति। दाक्षायौभ्भन् ॥

---

१ ते उभे इति इ० मु०।
२ मखेन्द्रायेति इ० मु० पुस्तकेऽधिकपाठः।
३ ते उभे अक्षरे इति ग०, इ० मु० च।
४ उभे अक्षरे इति ग०, इ० मु० च।
५ पृच्यस्वैकताय स्वाहेति ख०, इ० मु० च।
६ उभे अक्षरे इति ग०, इ० मु० च।

## अरमृकारपरे ॥ ८ ॥

अवर्णपूर्वे ऋकारपरे च सति ते उभे[१] अरमिति विकारमाप्नुतः। अर्द्धर्च एकां[२]। आग्नेय्यर्चाग्नीध्रमतिष्ठपेत् ॥

## उपसर्गपूर्व आरं ॥ ९ ॥

अवर्णपूर्वे इत्यनुवर्त्तते। तस्मादुपसर्गपूर्वे इत्यविशेषोक्तावथावर्णान्तीयमुपसर्गस्तस्यैव ग्रहणं[३]। ऋकारः सान्निध्याल्लभ्यते। उपसर्गपूर्वे ऋकारपरे च सति उभे[४] आरमिति विकारमाप्नुतः। उपार्च्छति[५]। अवार्च्छति। ऋतव्या उपोपार्त्तव्या ऋतव्या उप। अवर्णान्त उपसर्गविशेषणेन किं। व्यृद्धं वा एतत्। उपसर्गश्चासौ पूर्वस्तस्मिन्, उपसर्गपूर्वे[६] ॥

## उदात्तमुदात्तवति ॥ १० ॥

उदात्तधर्म्मविशिष्टे वर्णे पूर्व्वतः परत उभयतो वा स्थिते उभे[७] अप्येकादेशमापन्न उदात्तधर्म्ममाप्नुतः[८]। उदात्तोऽस्यास्तीत्युदात्तवान्, तस्मिन् उदात्तवति। समानाक्षरमारभ्य सर्व्वस्यैकीभावे[९] यथाक्रममुदात्तानुदात्तस्वरितपूर्वे उभयोरु-

---

१ उभे अक्षरे इति ग०, इ० मु० च।

२ एकां दध्यादिति ख०।

३ इत्यविशेषवर्णान्तीक्तावर्णान्तीयमुपसर्गस्तस्यैव ग्रहणमिति इ० मु०। इत्यवधिविशेषोक्तावप्यवर्णान्तीयमुपसर्गस्तस्यैव ग्रहणमिति ख०।

४ ते उभे अक्षरे इति इ० मु०।

५ उपार्च्छत्यथ क इति ख०।

६ उपसर्गश्चासौ पूर्वश्च उपसर्गपूर्वः, तस्मिन् उपसर्गपूर्वे इ० मु०। उपसर्गश्चासौ पूर्वश्च स तथोक्तः, तस्मिन् उपसर्गपूर्वे इति ख०।

७ स्थिते सति ते उभे इति ख०, इ० मु० च।

८ उदात्तधर्ममेकमाप्नुत इति ख०।

९ सर्वस्मादेकीभावे इति ख०, ग० च।

दात्ते चोदाहरणानि[१] दर्शयिष्यामः। सविता प्राप्पयतु। शुचार्पयति। ब्रह्म यच्छापाग्नेग्निं। याज्यैवैनं। पृषाधत्त। दिवीव चक्षुः। अद्य वसु वसतीतीन्द्रो हि देवानां। मैत्रावरुणो-त्याह। ननु सूत्रीयमित्यत्रोदात्तेनैकादेशे सति किं न स्यात् अयं विधिः। उदात्तपूर्व्वाधिकारे[२] सत्यभावे चेति सूत्रेण स्वरितस्य विशेषविधानादिति ब्रूमः। रेतो दधात्सक्थ्योः[३]। वनस्पतयोनूत्तिष्ठन्ति। ता दिचूपादधत। एवं समानाचर-संहितायामेकोभावोऽन्यत्रापि द्रष्टव्यः। एवमवर्णपर्व्वेऽपि वक्ष्यते। सेमात्रो हव्यदातिं[४]। तं घेदग्निः[५]। कार्य्येति सवनमुखा-न्[६]। सेदु होतः प्रोच्चितं गोपायत। ऊर्ज्जस्योजं बोभवी-येति। स्वायुषोदोषधीनां। इमे एवोपधत्ते। नैनं प्रत्योषति। एक एव यजेतैकः। अथैकमुत्थानं। यत्रैकाऌ रशनां। इन्द्रिय-मेवैन्द्रेण। विहितदेवैर्यतेति। देवेभ्य ऐभ्यं[७]। धत्रस्य चोजसे[८]। स्वाहौषधीभ्यः। सौषधीरनुरुध्यसे[९]। प्रोचोः केन[१०]। अरुणो ह स्वाहोपवेशिः। आग्नेय्यर्चाग्नीध्रं। सैवा-स्यार्द्धिः। ऐन्धिरिष्टृतः। एवभिरस्वदयत्। आर्त्तिमार्च्छति। अवर्च्छात्येवं[११]। एवमादि॥

---

१ वोदाहरणानीति ग०, इ० मु० च। 
२ उदात्तपूर्वस्याधिकारे इति ख०। 
३ दधात्समक्थ्येरिति ख०। दधात्-स्मक्थ्येश इति ग०। 
४ हव्यदातिं जुषाण इति ख०। 
५ घेदग्निष्टं धावतीति ख०। 
६ सवनमुखे सवनमुखे कार्येतीति ख०, ग० च। 
७ देवेभ्य ऐधैधं देवेभ्यो देवेभ्य ऐभ्येति ख०, ग० च। 
८ त्वौजसे इति ख०, ग० च। 
९ सौह्यषधीरनुरुध्यसे इति ख०। 
१० हविषो प्रोचीरितिति ख०। प्रोचीः कनाप इतीति ग०। 
११ अवार्च्छत्येवमवारमिति ग०।

## अनुनासिके अनुनासिकं ॥ ११ ॥

अप्रग्रहाः समानाक्षराण्यनुनासिकानीत्येषां मतमुद्दिश्यायं विधिः[१]। अस्मिन्[२] उदात्तवत्यनुनासिके पूर्वतः परत उभयतो वा स्थिते सति ते उभे अप्यक्षरे अनुनासिकं धर्म्ममेकमाप्नुतः। उक्तान्येवोदाहरणानि। एतदनिष्टं॥

## स्वरितानुदात्तसन्निपाते स्वरितं ॥ १२ ॥

स्वरितानुदात्तयोः सन्निपाते एकादेशे सत्यभावपि तौ स्वरितमापद्येते। यथा, कन्येव तुन्ना। क्वीं क्व्योपाक्रताय। याज्यैषा वै सप्तपदा[३]। अथ क्वास्य[४]। इह स्वरितस्याविशेषेण ग्रहणे नित्यस्वरित एव गृह्यते। तस्य सव्यञ्जनानामक्षराणाञ्च[५] पदावयवानामुत्पत्तिकाल एव सम्भवात्। अन्येषाञ्च[६] पदोत्पत्तिकालादूर्द्ध्वमक्षराणां पदानाञ्च संहितायामुदात्तात् परोनुदात्त इति विधानात्। तस्मिन्ननुदात्ते पूर्व उदात्त इत्यादि[७]। तस्मान्नित्यस्यैव मुख्यत्वम्। सामान्योक्तौ च सत्यां मुख्ये सम्प्रत्यय इति तस्यैव स्वीकारो युक्तः। अथाब्रवीदित्यादावेकादेशस्योदात्तानन्तरभावित्वादुदात्तात्परोऽनुदात्तस्वरितमिति अनेनैव स्वरितत्वं विज्ञेयं॥

---

१ अनुनासिकान्येकेषामित्येकेषां मतम्। तामुद्दिश्यायं विधिरिति इ० मु०। अनुनासिकानीत्येषां मतं तदुद्दिश्यायं विधिरिति ग०।

२ तस्मिन्निति इ० मु०।

३ सप्तपदा शक्वरी इति ग०।

४ क्वास्याहवनीय इति ग०।

५ स्वरितव्यञ्जनानामक्षराणाञ्चेति ग०। स्वरितस्य व्यञ्जनानामक्षराणाञ्चेति इ० मु०।

६ अन्येषाञ्च इति ग०, इ० मु० च।

७ उदात्तस्वरितमित्यादि चेति ग०, इ० मु० च।

**न धामापासिपरो बुभ्रियाज्यापूषामिनन्तार्षे ॥ १३ ॥**

धा, मा, पा, एष्वन्त्यस्वर आर्षपाठकाले[१] असिपरः, बुभ्रिया, ज्या, आ, पूषा, अमिनन्त, एष्वन्त्यस्वर[२]आर्षे स्वरपरः पूर्वविधिं न प्राप्नोति। यथा, स्वधा अस्युर्वी। सहस्रस्य प्रमा असि। धन्वन्निव प्रपा असि। असि पर इति किं। स्वधेति स्वाधा। प्रमेति प्रामा। प्रपेति प्राप[३]। आर्ष इति किं। स्वधा अस्यसि स्वधा स्वधासि। एवमादि। प्रपा अस्यसि प्रपा प्रपासि। प्र बुभ्रिया ईरते। ज्या इयं[४]। आ पूषा एत्वावसु। आकारः किमर्थः। तं पूषाधत्त। आ ते सुपर्णा अमिनन्त[५]। आर्षस्वरपर इति किं। बुभ्रिया ईरत ईरते बुभ्रिया बुभ्रियेरते। ज्या इयमियं ज्या इयम्। आ पूषा पूषा पूषा। पूषा पूषा एत्वेतु पूषा पूषैतु। अमिनन्त एवैरेवैरमिनन्तामिनन्तैवैः। आर्षेस्वर-पर[६]इति किं। असि स्वधा स्वस्यसि स्वधा। सुपर्णा अमिनन्ता-मिनन्त सुपर्णाः सुपर्णा अमिनन्त। इदमेव प्रत्युदाहरणं। ननु ज्येयममिनन्त वैरित्यादिजटायामपि तृतीयपर्य्यायस्य प्रकृतित्वात्। पूषा एत्वेतु पूषा पूषैतु। अमिनन्त एवैरमिनन्तामिनन्त एवैः। आ पूषा पूषा पूषा[७] ॥

**एष्टरेतनेमन्नोह्मन्नोष्ठेवःपरो लुप्यते ॥ १४ ॥**

एष्टः, एतन, एमन्, ओह्मन्, ओष्ठ, एवः, इत्येवम्परो अवर्णो

१ आर्षे पाठे इति इ० मु०।

२ एतेष्वन्त्यस्वर इति इ० मु०।

३ स्वधेति स्वऽधा। प्रमेति प्रऽमा। प्रपेति प्रऽपा इति ग०।

४ धन्वन् ज्या इयं मिति इ० मु०।

५ अमिनन्त एवैरिति ग०।

६ आर्षस्वरपर इति इ० मु०।

७ आपषा इत्यारभ्य अमिनन्त एवैरिति पाठो ग०, चिकित्सपुस्तके नास्ति। इ० मु० पुस्तकेष्वत्तु आपूषेत्यारभ्य सर्वस्वरम-पाठो नास्ति। तत्र केवलं पूषा अमिनन्त इत्युदाह-रणद्वय मेवास्ति।

लुप्यते। अथावर्णपूर्व्वे इत्यनुवर्त्तमानादवर्णं(१) इति लभ्यते। अग्नीयेष्टा रायः। शमितार उपेत न। अपान्त्वेमन्त्साद्यामि-त्यपान्त्वान्नन्त्सादयामि। स्वाह्णोष्ठाभ्यां। ओष्ठशब्दस्य सर्व्वावस्थस्य ग्रहणं भवति, ग्रहणस्येति(२) वचनात्। उपयाम-मधरेणोष्ठेन। निरमिमतेवस्छन्दः। अवर्णो लुप्यत(३) इति किं। शित्योष्ठः शितिभ्रुः। शित्योष्ठाय स्वाहा॥

## इवर्णोकारौ यवकारौ॥ १५॥

अवर्णपूर्व्वोऽधिकारो निवृत्तः। स्वरपराधिकारस्तु वर्त्तते। अथ स्वरपरो यकारमिति पूर्व्वाध्याये प्रक्रान्तः। इवर्णोकारौ पदान्तौ स्वरपरौ यथासङ्ख्येन यकारवकारावापद्येते(४)। अभ्यस्थात्। भवोत्यश्यामः(५)। आ पूषा एत्वावसु। दीर्घस्य प्रग्रहत्वविधानात्(६) प्लुतस्य(७) सन्धिनिषेधात्, उकारस्य कारोत्तरत्वं कृतम्, इवर्णोकारौ यवकाराविति॥

## उदात्तयोश्च परोऽनुदात्तः स्वरितं॥ १६॥

'च'कारः पूर्व्वसूत्रोक्तनिमित्तिनाविवर्णोकारावन्वादिशति। उदात्तयोरिवर्णोकारयोः परोऽनुदात्तः(८) स्वरितमापद्यते। व्येवैनेन। अप्स्वग्ने। उदात्तयोरिति किं। नोचातं धच्यतसं।

---

१ इत्यनुवर्त्तनादवर्णं इति ग०, इ० मु० च।

२ ग्रहणस्य चेति इति ग० इ० मु० च।

३ अवर्णपूर्वो लुप्यते इति ग०।

४ यवकारावापद्येते इति इ० मु०।

५ जत्यश्यामेति ग०, इ० मु० च।

६ प्रग्रहधानादिति ग०।

७ तस्येति ग०।

८ परोनुदात्तयोश्चेति ग०। परोनुदात्तश्चेति इ० मु०।

मध्वग्नौ जुहोति। परोऽनुदत्त इति किं। तद्यद्दच्यध्वराणि[१]। सत्वे यजेत। इन्वानं उपस्तीर्णं[२]॥

## अभावे च॥ १७॥

'च'कारः पूर्व्वस्योदात्तत्वान्वाकर्षकः[३], परस्य चानुदात्तत्व-मन्वादिशति। पूर्व्वेणोदात्तेन परस्य चानुदात्तस्य[४] अभावे क्रियमाणे स्वरितं जानीयात्। यथा, सून्नीयमिव। सून्नाता। मा सूत्तिष्ठन्। दिवूपदधाति। पूर्व्वेणोदात्तेनेति किं[५]। सूपस्थादेव। परस्यानुदात्तस्येति किं[६]। ता दिवूपाद-धतत॥

## न श्येतौ मिथुनौ॥ १८॥

श्येतौ, मिथुनौ, इत्येतयोरन्त्यस्वरो यथाविहितं[७] नान्यते। यथा, श्येतेन श्येती अकुरुत। मिथुनौ[८] अभवन्॥

## लुप्येते त्ववर्णपूर्व्वौ यवकारौ॥ १९॥

अवर्णपूर्व्वौ स्वरपरौ यकारवकारौ लुप्येते। यथा, आप उन्दन्तु। ध्रुवा अस्मिन् गोपतौ स्यात्। न विचिन्त्याइ इति। इम एवास्मै। आसामहा एवेमौ। अवर्णपूर्व्व इति किं। वाय-

---

१ तद्यद्दच्यध्वराणि इति क०।

२ इन्वा उपस्तीर्णमिच्छन्ति इति इ० मु०। इन्वा उपस्तीर्णमिच्छंढठन्ति इति ग०।

३ पूर्वोदात्तत्वान्वाकर्षक इति इ० मु०।

४ परस्यानुदात्तस्येति ग०, इ० मु० घ।

५ पूर्वेणोदात्तेन किमिति ग०, इ० मु० घ।

६ परस्यानुदात्तेन किमिति ग०।

७ यथाविहितं यत्वमिति ग०, इ० मु० घ।

८ न मिथुनौ इति इ० मु०।

विष्टये दुरोणे। अहावनद्दत। मर्त्याँ आविवेश। एवम्पूर्व्वाविति किं। अभ्यस्थात्। हतस्रसः। 'तु'शब्द इतरौ यवकारौ[1] निवर्त्तयन्नादेशप्राप्तयोरेवानयोर्लोपविषयत्वं द्योतयति। अवर्णः पूर्व्वौ याभ्यां तावपूर्व्वौ॥

नोख्यस्य॥ २०॥

उख्यस्य शाखिनः पक्षे अवर्णपूर्व्वौ यवकारौ न लुप्येते। उक्तान्येवोदाहरणानि॥

वकारस्तु साङ्कृत्यस्य॥ २१॥

सान्निध्यान्निषेधो लभ्यते। साङ्कृत्यस्य मते अवर्णपूर्व्वो वकारो न लुप्यते, यकारस्तु लुप्यत एवेत्यर्थः।[2] अहावनद्दत[3]। पूर्व्वाचार्य्यमतनिवर्त्तकः, 'तु'शब्दः। सूत्रमिदमेवेष्टम्। न तु पूर्व्वद्वयं परद्वयञ्च॥

उकारौकारपरौ लुप्येते माचाकीयस्य॥ २२॥

यकारवकारावपूर्व्वौ उकारौकारकपरौ लुप्येते, यथासङ्ख्यं माचाकीयस्याचार्य्यस्य मतेन[4]। आप उन्दन्तु। या जाता ओषधयः[5]। एवम्पराविति किं। त एनां भिषज्यन्ति। वायविष्टये। लुप्येते इति इह पुनरारम्भः। पूर्व्वसूत्रप्रयोजनसम्बन्धशङ्कानिराकरणार्थः[6]॥

---

१ यवौ इति ग०।

२ वायव इष्टये दुरोणो इति इ० मु० पुस्तकेऽधिकः पाठः।

३ अहावनद्दताहते इति ग०, इ० मु० च।

४ मते इति इ० मु०।

५ ग, चिह्नितपुस्तके जाता इति पाठो नास्ति।

६ पूर्वसूत्रद्वयस्थितप्रयोजनसम्बन्धशङ्कानिराकरणार्थं इति ग०। पूर्वसूत्रद्वयस्थितजः सम्बन्धशङ्कानिराकरणार्थं इति इ० मु०।

## लेशो वात्सप्रस्यैतयोः ॥ २३ ॥

वात्सप्रमते[१] यकारवकारयोः[२] अवर्णपूर्व्वयोर्लेशः स्यात्। लेशो नाम लुप्तवदुच्चारणं[३]। एतयोरित्युकारौकारपरौ निर्द्दिशति। उक्तान्येवोदाहरणानि ॥

## न प्लुतप्रग्रहौ ॥ २४ ॥

न खलु प्लुतः प्रग्रहश्च सन्धिविधिं भजते[४]। यथा, अस्तुहौ३ इत्यब्रूताम्। ते एनमभि। इत्यादिविधौ निषिद्धे अन्यस्मिंश्चानारभ्यमाणे प्रकृतिवद्भवति ॥

## परस्य परस्य ॥ २५ ॥

चकाराकृष्टयोर्य्यकारवकारयोर्लोपे[५] सति परसन्धिर्न[६] भवति। यथा, आप उन्दन्तु। अग्न इमं। सान्निध्यात्पृष्ठे लभ्यते। ननु लोपे सतीत्येतावतैवालं यकारवकारयोरिति किं[७]। सेदुहोता। सैनानीकेन। सोषधीरनु[८]। इत्यादि।

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे दशमोऽध्यायः ॥

---

१ एतयोरिति इ० मु० पुस्तकेषिकः पाठः।

२ यवकारयोरिति ग०।

३ लुप्तमुच्चारणमिति ग०।

४ सन्धिविधिं भजेते इति इ० मु०। सम्बन्धिविधिं भजते इति क०।

५ यवकारयोर्लोपे इति ग०, इ० मु० च।

६ परः सन्धिर्नेति इ० मु०।

७ यवकारयोरिति किमिति ग०, इ० मु० च।

८ सौषधीरिति ग०।

## अथैकादशोऽध्यायः।

### लुप्यते ऽकार एकारौकारपूर्व्वः ॥ १ ॥

एकारपूर्व्व ओकारपूर्व्वो वा अकारो लुप्यते। यथा, तेऽब्रुवन्। (१),'तु' शब्दो न प्लुतप्रग्रहाविति निषेधसम्बन्धं(२) निवर्त्तयतीति केचित्। स्वरपराधिकारं निवारयतीत्यपरे सङ्गिरन्ते। एकारौकारौ पूर्व्वौ यस्मात् सः, तथोक्तः ॥

### अथालोपः ॥ २ ॥

'अथ' इत्ययमधिकारः। अलोप उच्यते, इत्येतदधिकृतं वेदितव्यम्, इत उत्तरं यद्वक्ष्यामः। न लोपः, अलोपः, लोपाभाव इत्यर्थः ॥

### धातारातिरुपवाजपेयजुष्टश्येनायोस्व्यध्रुवच्चितिरियमेवसायाग्निर्मूर्द्धारुद्रप्रथमोपोत्तमविकर्षविद्वव्यच्चिरण्यवर्णीययाञ्यामह्यापृष्ठेषु ॥ ३ ॥

धातारातिरित्यादिष्वनुवाकेषु एकारपूर्व्व ओकारपूर्व्वो वा अकारो न लुप्यते। धातारातिरित्यत्र यथा, निधिपतिर्नो अग्निः।

---

१ सोऽब्रवीदिति इ० मु० पुस्तकेऽधिकः पाठः।

२ निषेधसम्बन्धविधिमिति ग०, इ० म०च।

रातिरिति किं। धाता देवेभ्योऽसुरान्, इति शाखान्तरे। उप-प्रयन्तो अध्वरमित्यत्र यथा, आरे अस्मे च, देव सवितः प्रसुव, इत्यादिषडनुवाकानां वाजपेयसञ्ज्ञा। अत्र यथा, ते नो अर्व्वन्तः। ते अग्रे अश्वं[1]। जुष्टोवाच इत्यत्र यथा, यस्ते अꣳशुः। यो द्रप्सोः अꣳशुः। श्येनायेत्यत्र यथा[2], नम पितृभ्यो अभि। विश्वे अरपा एधते। उख्ये यथा, शृण्वन्ति विश्वे अमृतस्य। नमो अस्तु सर्पेभ्यः। ध्रुवक्षितिरित्यत्र यथा, विश्वे अभिगृणन्तु। ऊर्मिर्द्रप्सो अपां। क्षितिरिति किं। ध्रुवेत्यकारान्तस्य यदि ग्रहणं स्यात्। ध्रुवोसि ध्रुवोहमित्यत्रापि भवेदिति। इयमेव सायेत्यत्र, केतुं कृण्वाने अजरे। त्रयो घर्म्मासो अनु। इयमित्येतावतैवालं किमन्येन[3]। इयं ते शुक्र तनूरित्यत्र, सगर्भ्यो[4] अनुसखेत्यत्र, माभूदिति, सायेति पदद्वयं मन्दधियां प्रतिपत्त्यर्थमिति केचित्। अन्येत्वन्यथापि[5] कथयन्ति। अस्यानुवाकस्य शेषभूता या[6] ऋगन्यत्र स्थिता सापि स्वीकर्त्तव्येति[7]। यथा, ये अपरीषु पश्चात्[8]। अग्निर्मूर्द्धा दिव इत्यत्र यथा, स योजते अरुषः। एनावो अग्निं[9]। मूर्द्धेति किं। अग्निर्मादुरिष्टादित्यत्र, यो मेतिदूरे रातीत्यत्र माभूदिति[10]। रुद्रप्रश्नस्य प्रथमापोत्तमानुवाकयोर्यथा, नमो

१ अपूर्वमा युञ्जन्निति ग०।

२ श्येनाय पत्वने इत्यत्र यथेति ग०, इ० मु० च।

३ किमन्यैरिति ग०।

४ सगर्भ इति ग०।

५ अन्येत्वन्यथेति ग०, इ० मु० च।

६ शेषोभूता या इति ग०।

७ ऋगन्यत्र स्थितामपि स्वीकरोतीति ग०।

८ ओ ते यन्ति ये अपरीषु पश्यादिति ग०, इ० मु० च।

९ अग्नि नमस इति ग०।

१० योमेतिदूरेगातीयतीति ग, चिह्नित-पुस्तके पाठोस्ति। माभूदितीति पाठस्तु नास्ति।

अस्तु नीलग्रीवाय (१) उत मा नो अर्भकम्। उत्तमस्य पूर्व्वतः सन्निकृष्टः, उपोत्तमः। अश्मन्नूर्जमित्यनुवाकपञ्चकस्य(२) विकर्षसञ्ज्ञा। तत्र, अन्यन्ते अस्मत्। पावको अस्मभ्यम्। यो नः सतो अभि रायस्पोषे अधियज्ञो अस्थात्। वाजो नः सप्तेत्याद्यनुवाकत्रयस्य(३) विहव्य सञ्ज्ञा। तत्र, विश्वे अद्य मरुतः। देवासो अधिवोचत(४)। हिरण्यवर्णीये यथा, एको देवो अप्यतिष्ठत्। याज्यासु यथा, सुपथा राये अस्मान्। कामेन क्रतो अभि(५)। समिद्दिशां, जीमूतस्य, यदक्रन्दो, मानो मित्रो, ये वाजिनम्, अग्निर्मन्वे, षण्णामेषामनुवाकानां महापृष्ठसञ्ज्ञा। तत्र, विवस्वदाते अभि नः। सोमो अधिब्रवीतु। महेति किं। पृथिवी तेन्तरिक्षेण॥

## अꣳहसोꣳहतिरनिष्टृतोऽवन्त्वस्मानवद्यादहनि च॥४॥

'च'कारो धातारातिरित्यादिविषयान्वादेशकः(६)। अꣳहसः, अꣳहतिः, अनिष्टृतः, अवन्त्वस्मान्, अवद्यात्, अहनि, इत्येतेषु ग्रहणेषु धातारातिरित्यादिस्थलेष्वन्तर्वर्त्तिष्वेकारपूर्वं ओकारपूर्वो वा(७) न लुप्यते। यथा, प्रमुञ्चतो नो अꣳहसः। परिद्वेषसो

---

१ द्रापे अन्धसस्पते इति ग० चिह्नित-पुस्तके ह० मु० पुस्तके चाधिकपाठः।

२ अश्मन्नूर्जमित्यत्रानुवाकपञ्चकस्येति ग०, ह० मु० च।

३ वाजो नः सप्त प्रदिश इत्यत्राद्यनुवाकत्रयस्येति ग०, ह० मु० च।

४ विश्वे देवासो अधिवोचता मे इति ह० मु०।

५ कामेन क्रतो अभ्यानदिति ह० मु०।

६ विषयान्वादिशतीति ग०।

७ एकारपूर्वो वौकारपूर्वो वा अकार इति ग०, ह० मु०।

अꣳहतिः। वर्द्धतान्ते अनिष्टृतः। ते भवन्त्वस्मान्। अस्मानिति किं। तेनोऽवन्तु पितरः। मित्रमहो अवद्यात्। शुचिः शुक्रे अहनि(१)। यवनहपरत्वादेषु प्राप्यमाणलोपेषु अलोपोऽयं विहितः। अन्वादेशः किमर्थः। स एवैनं पाप्मनोꣳहसो मुञ्चति॥

## अनु घर्म्मासआपोमर्त्तारथस्त्वोदत्तेवातःपूर्वः॥ ५॥

अत्र विसर्गान्तानामोत्वमापन्नानां पूर्वनिमित्तत्वमिति विज्ञेयं। घर्म्मासः, आपः, मर्त्तः, रथः, त्वः, दत्ते, वातः, एवम्पूर्वः(२) अन्वित्यत्र अकारो न लुप्यते। यथा, त्रयो घर्म्मासो अनु। तस्मादापो अनु(३)। यदा ते मर्त्तो अनु। अनु त्वा रथो अनु। पोयति त्वो अनु। शुक्रमादत्ते अनुहाय(४)। धनुस्तद्वातो अनु(५)। अन्विति किं। वातोऽभिपवते(६)। एवम्पूर्व इति किं। अनुगावोऽनुभगः(७)। यवनहपरत्वनिषेधार्थोऽयमारम्भः॥

## अभिवात्वपश्च॥ ६॥

'च'कारो वात इत्यन्वादिशति। अभिवातु, अपः, इत्येतयोरकारो वातःपूर्वो न लुप्यते। मयोभूर्वातो अभिवातु(८)।

---

१ अहन्योअस्तोनेति ग०, ह० मु० च।
२ इत्येवम्पूर्व इति ग०, ह०मु० च।
३ अनु स्थ नेति ग०, ह०, मु० च।
४ अनुहाय आर्यै इति ग०,ह० मु० च।
५ अनुवातु ते इति ग०, ह० मु० च।
६ अमुष्मिंल्लोके वातोऽभिपवते इति ह० मु०।
७ अनुगावोऽनुभगः कनीनामिति ह०मु०।
८ अभिवातूर्ज इति ह० मु०।

वात्विति किं। वातोऽभिपवते[१]। यद्वातो अपो अगमत्। अन्वादेशेन किं[२]। अवरुन्धेऽपोऽग्नेऽभिव्याहरति॥

अन्वगमच्च॥ ७॥

अप इति 'च'कारोऽन्वादिशति। अनु, अगमत्, इत्येतयोरकारो न खल्वपःपूर्वौ लुप्यते। अपो अन्वचारिषं। अपो अगमदिन्द्रस्य। एवम्पूर्व इति किं। पशवोनूदायन्॥

आपःपूर्वोऽङ्गिरपान्नपादस्मान्॥ ८॥

अङ्गिः, अपान्नपात्, अस्मान्, एतेषु अकार आपःपूर्वो न लुप्यते। समापो अङ्गिरग्मत। देवी रापो अपान्नपात्। नपादिति किं। वारुणीरापोपास्व। आपो अस्मान्मातरः[३]। एवम्पूर्व इति किं। सोऽस्मान् पातु॥

रायेसइन्द्रःपूर्वश्चाकारपरे॥ ९॥

'च'काराकृष्टे अस्मान्ग्रहणे अकारपरे[४] वर्त्तमानोऽकारो राये, सः, इन्द्रः, एवम्पूर्वो[५] न लुप्यते। रायेपूर्वस्योदाहरणं शाखान्तरे, अथवा जटायाम्भवति। राये अस्माꣳ अस्मान् राये राये अस्मान्। यथासंहितायां नोदाहरणम्, अकारपरत्वाभावात्, तर्हि तदा[६] कथमलोप इति चेत्। त्रिपदप्रभृतिपुनरुक्तत्वादिति ब्रूमः। मा सो अस्माꣳ अवहाय[७]। इन्द्रो अस्मानस्मिन्[८]।

---

१ वातोभिपवते इति ग०।

२ वातपूर्व इति किमिति ग०।

३ अस्मान्मातरः शुन्धन्त्विति ग०।

४ अकारपरे सति इति इ० मु०।

५ इत्येवम्पूर्व इति ग०, इ० मु० च।

६ तदेति पदं ग० चिह्निते इ०मु० पुस्तके च नास्ति।

७ सामो अस्मानवहायेति ग०।

८ इन्द्रो अस्मानस्मिन् द्वितीये इति ग०,इ० मु० च।

अकारपर इति किं। सोऽस्मान् पातु। एवम्पूर्व इति किं। सो-ऽस्मानमुत्र। अकारः परो यस्मात् तत् अकारपरम्, तस्मिन्॥

तेपूर्वाऽद्यान्धोऽंशुरग्ने॥१०॥

अद्य, अन्धः, अंशुः, अग्ने, एतेष्वकारः, ते इत्येवम्पूर्वो न लुप्यते। यथा, पशुं पशुपते ते अद्य। उपो ते अन्धः। अंशुना ते अंशुः। यत्ते अग्ने तेजस्तेनाहं। एतेष्विति किं। तेऽग्नये-प्रवते(१)। तेपूर्व इति किं। प्रथमोऽंशु स्कन्दति। तेन त्वा दधेग्ने अङ्गिरः॥

मेपूर्वश्च॥११॥

'च' कारात्कृष्टे सति अग्न इत्यस्मिन् अकारो मे इत्येवम्पूर्वो न लुप्यते(२)। यथा, यन्मे अग्ने अस्य। इमा मे अग्न इष्टकाः। मेपूर्व इति किम्। तेन त्वा दधेऽग्ने अङ्गिरः। अन्वादेशेन किं। प्राणश्च मेऽपानश्च मे। तदग्नकं तन्मे राधि॥

अस्याश्विनापरा च॥१२॥

मेपूर्व इति 'च'कारोऽन्वादिशति। अस्य, अश्विना, अपरा, एतेष्वकारो मेपूर्वो न लुप्यते। वियन्तु देवा हविषो मे अस्य। पुनर्मे अश्विना युवं(१)। यद्वा मे अपरागतं॥

---

१ ते तेग्नये प्रवते इति इ० मु०। मे पूर्वोऽग्ने इत्ययाकारो न लुप्यते इति इ०मु०।
२ चकारोऽग्ने इत्यन्वादिशति। ३ युवं चच इति इ० मु०।

## नःपूर्वोऽसदग्निरघान्तमोऽभ्यस्मिन्नद्यपथि ॥ १३ ॥

असत्, अग्निः, अघ, अन्तमः, अभि, अस्मिन्, अद्यपथि, एतेष्वकारो न इत्येवम्पूर्वो न लुप्यते। यथा, सुपारा नो असद्वशे। अयं नो अग्निर्वरिवः। रक्षामाकिर्नो अघशꣳस ईशत। अग्ने त्वं नो अन्तमः। स्विष्टिर्नो अभि(१)। शिक्षा नो अस्मिन्। तेभिर्नो अद्यपथिभिः(२)। पथीति किं। नोद्य वसु वसतीति। नःपूर्व इति किं। तस्मादश्वाद्गर्दभोऽसत्तरः। सोऽग्निर्जातः। उत्तरतोघायुरभिदासति। तेस्मिन्नैच्छन्त। एतेष्विति किं(३)। ते नः पान्तु ते नोऽवन्तु॥

## नमःपूर्वोऽग्रेऽश्वेभ्योऽग्रियाय ॥ १४ ॥

अग्रे, अश्वेभ्यः, अग्रियाय, एतेष्वकारो नमःपूर्वो न लुप्यते। नमो अग्रेवधाय च। नमो अश्वेभ्योऽश्वपतिभ्यः। नमो अग्रियाय च। नमःपूर्व इति किं। अपोऽग्रेऽभिव्याहरति। एतेष्विति किं। नमोग्नये प्रतिविद्धाय॥

## आविन्नःसोमःपूर्वो ग्निपरः(४) ॥ १५ ॥

आविन्नः, सोमः, एवम्पूर्वोऽकारोऽग्निपरो न लुप्यते। ग्नीतिपदैकदेशः शाखान्तरे बह्वुपादानार्थः। आविन्नो अग्निर्गृहपतिः। सोमो अग्निरुप देवाः। एवम्पूर्व इति किं। सोग्निर्जातः। एवम्पर इति किं। आविन्नोयमसौ॥

---

१ स्विष्टिं नो अभिवसीय इति इ० मु०। स्विष्टिं नो अभिवसीयो नयन्त्विति ग०।

२ अद्यपथिभिः सुगेभी रक्षा च न इति

३ नमोग्नये प्रतिविद्धायेति पाठः इ० मु० पुस्तकेष्वधिकोस्ति।

४ पूर्वोऽग्निपरः इति क०।

धीरासोऽदब्धासएकादशासऋषीणांपुत्रःशार्यातेऽषा-
ढःपितारःपृथिवीयज्ञआसतेयेगृह्णाम्यग्रेवाꣳएषजज्ञेसꣳस्फा-
नोयुवयोर्यःपृष्ठेपतिर्वांगोशुष्मःपुवःसमिद्धऋषभःपाथोवचो-
वर्षिष्ठेजुषाणोयोरुद्रोवृष्णःपूर्वः॥ १६ ॥

धीरासः, अदब्धासः, एकादशासः, ऋषीणां पुत्रः, शार्याते, अषाढः, पितारः, पृथिवी यज्ञे, आसते ये, गृह्णाम्यग्रे, वाꣳएषः जज्ञे, सꣳस्फानः, युवयोर्यः, पृष्ठे, पतिर्वः, गो, शुष्मः पुवः, समिद्धः, ऋषभः, पाथः, वचः, वर्षिष्ठे, जुषाणः, यो रुद्रः, वृष्णः, एवम्पूर्वा न खल्वकारो लुप्यते। यथा, धीरासो(१) अनुदृश्य यजन्ते। अदब्धासो अदाभ्यं। एकादशासो, अप्सुषदः। ऋषीणां पुत्रो अधिराज एषः। ऋषीणामिति किं। यस्य पुत्रो जातः। यथा शार्याते अपिवः। अषाढो अग्निः। त्वत्पितारो अग्ने देवाः। पृथिवी यज्ञे अस्मिन्। पृथिवीति किं। ते मास्मिन् यज्ञे, इत्यत्र(२) जटायां। अध्यासते ये अन्तरिक्षे। आसत इति किं। पृथिव्यां(३) येन्तरिक्षे। मयि गृह्णाम्यग्रे अग्निं। गृह्णामीति किं। अष्टौ-कृत्वोग्रेभिषुणोति। इडावाꣳएषो असुर। वानिति किं। शुक्र एषोऽन्तोऽन्तं मनुष्यः। प्रथमं(४) यज्ञे अग्निः। सꣳस्फानो अभि-रक्षतु। समिति किं। गयस्फानोऽग्निषु, इति शाखान्तरे।

१ तां धीरास इति ग०, ह० मु० च। ३ ये पृथिव्यामिति ह० मु०।
२ यज्ञ इतीति ग०। ४ इतः प्रथममिति ग०, ह० मु० च।

युवयोर्या अस्ति। युवयोरिति किं। योप्सु भस्म[१]। नाकस्य पृष्ठे अधि[२]। यज्ञपतिर्वा अत्र। पतिरिति किं। नवो भागानि हव्यं। गो अर्घमेव सोमं करोति। अय्यकारादिति वचनात् अगो अर्घम् इति चोदाहरणं। उच्छुष्मो अग्ने यजमानाय[३]। अग्रे पुवो अग्रे गुवः। समिद्धो अञ्जन्। द्यामृषभो अन्तरीक्षं। प्रियं पाथो अपीहि। उग्रं वचो अपावधीत्[४]। वर्षिष्ठे अधि-नाके। जुषाणो अप्तुराज्यस्य वेतु। यो रुद्रो अग्नौ यः। य इति किं। यदुपलब्याद्रुद्रोस्य[५]। वृष्णो अश्वस्य सन्दानं[६]॥

अरतिमस्ययज्ञस्यातिद्रुतोऽतियन्त्यनृणोऽविष्यन्ननमीवोऽ-न्नेष्वर्चिरजीतानज्यानिमक्रियाअम्बाल्यर्वन्तमस्त्वक्रणोद-ङ्गिरोऽप्सुयोअस्कभायदच्युतोऽश्वसनिरस्थभिरग्निश्रेदङ्गेऽ-घ्निय॥१७॥

अरतिं, अस्य यज्ञस्य, अतिद्रुतः, अतियन्ति, अनृणः, अवि-ष्यन्, अनमीवः, अन्नेषु, अर्चिः, अजीतान्, अज्यानिं, अक्रियाः, अम्बालि, अर्वन्तं, अस्तु, अक्रणोत्, अङ्गिरः, अप्सु यः, अस्कभायत्, अच्युतः, अश्वसनिः, अस्थभिः अग्निश्रेत्, अङ्गे, अघ्निय, एतेष्व-कारो न खल्वेकारपूर्वं ओकारपूर्वो वा लुप्यते। यथा, मूर्द्धान-

---

१ योप्सु भस्म प्रवेशयति इति इ० मु०। ४ अपावधीमिति ग०, इ०, मु० च।
२ अधिरोचने दिव इति ग०, इ० मु० च। ५ यदुपलंब्याद्र द्रोस्येति इ० मु०।
३ यजमानायैधीति इ० मु०। ६ सन्दानमसीति ग०, इ० मु०।

न्दिवो अरतिं(१)। यन्मे अग्ने अस्य यज्ञस्य। यज्ञस्येति किं। एतेऽस्याममुष्मिन्। प्रत्यङ्क्सोमो अतिद्रुतः। पश्यन्तो अतियन्ति। द्रुतीयन्तोभ्यां किं(२)। नैनं सोमोतिपवते। तदग्ने अनृणो भवामि। नयवसे अविष्यन्। स्वावेशो अनमीवः(३)। ये अन्नेषु विविध्यन्ति। जातवेदो यो अर्चिः। मरुद्ो अजीतान्। तेषां यो अज्यानिं। तिरो अङ्गिया मा सुहुताः। अम्बे अम्बालि। यो अवन्तं जिघांसति। वहिस्ते अस्तु बालिति। इत इन्द्रो अक्रणोत्। अग्ने अङ्गिरो योस्यां। ये अप्सु य ओषधीषु। य इति किं। अश्वोप्सु योवेतसः(४)। ये अस्त्भायदुत्तरं। मदाय रसो अच्युतः। ये भचो अश्वसनिः। सनिरिति किं। अश्वे-भ्योऽश्वपतिभ्यः(५)। इन्द्रो दधीचो अस्थभिः। भिरिति किं (६)। दद्वीशमस्थभ्यो मज्जभ्य(७) इत्यत्र जटायां(८) अस्थभ्यो मज्जभ्यो मज्जभ्योऽस्थभ्योऽस्थभ्यो मज्जभ्यः। वरुणो अभिश्चेत्। अङ्गे अङ्गे निदेध्यत्(९)। अभियेत्यकारग्रहणात् पदैकदेशो बहुपादार्थः। एतानि ते अभिये नामानि। यदापो अभिया वरुणेति(१०)। पयो अघियासुहृतम्।

---

१ अरतिं पृथिव्या इति इ० मु०।

२ द्रुतो यन्तोत्याभ्यांकिमिति इ० मु०। द्रुतोतियन्तो इत्येताभ्यां किमिति ग०।

३ अनमीवो भवानि इति इ० मु०।

४ अप्सुजो वेतस इति ग०, इ० मु० च।

५ अश्वपतिभ्यश्चेति इ० मु०।

६ अस्थभिरिति किमिति इ० मु०, ग० च। अस्थभिरितिकिमिति ग०।

७ ग, चिह्नित इ० मु० पुस्तके च दद्वीति पदं नास्ति।

८ इति जटायामिति ग०।

९ निदध्यदिति ग०।

१० वरुणेति अपामहे इति इ० मु०।

अध्वर स्वरपरे ॥ १८ ॥

अध्वर इत्यस्मिन् ग्रहणे स्वरपरे वर्त्तमानोऽकारो न खल्वेकारौकारपूर्व्वो वा[1] लुप्यते। सत्यधर्म्माणो अध्वरे। हविष्मान् देवो अध्वरः। उपप्रयन्तो अध्वरमित्याह। अत्र त्रिपदप्रभृतिन्यायेन[2] प्रसरति। तल्लक्षणासम्भवात्[3]। स्वरपर इति किं। शुग्वा अग्निः सोध्वर्य्युं[4] ॥

स पूर्व्वस्यार्द्धसदृशमेकेषामर्द्धसदृशमेकेषाम् ॥ १९ ॥

योऽयमकारोऽलुप्तः स पूर्व्वस्य एकारस्य ओकारस्य वा अर्द्धमात्रसदृशं कालं भजते इत्येकेषामृषीणां मतं। अध्यर्द्धमात्रः स्यादित्यर्थः। उक्तान्येवोदाहरणानि दर्शनात्[5]। अर्द्धेन सदृशः अर्द्धसदृशः, तम्, अर्द्धसदृशम् ॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे एकादशोऽध्यायः ॥

---

१ वेति पदं इ० मु० पुस्तके नास्ति।

२ त्रिपदन्यायेनेति ग०।

३ तल्लक्षणाभावसम्भवादिति ग०।

४ सोध्वर्य्युरिति ग०।

५ विशेषदर्शनादिति ग०, इ० मु० च।

## अथ द्वादशोऽध्यायः।



### अथ लोपः॥ १॥

'अथ' इत्ययमधिकारः। अकारस्य लोप उच्यते, इत्येतदधिकृतं वेदितव्यं, इत उत्तरं यद्वक्ष्यामः। धातारातिरित्यादिविषयोऽयमध्यायारम्भः॥

### असि॥ २॥

'असि' इत्यस्मिन् अकारो लुप्यते, एकारौकारपूर्व्वः। यथा, सुपर्णोऽसि गरुत्मान्। प्रथोऽसि पृथिव्यसि॥

### न गर्भःसन्नद्धोयमोभद्रःपूर्व्वः॥ ३॥

गर्भः, सन्नद्धः, यमः, भद्रः, एवम्पूर्व्वः सान्निध्याल्लब्धे असीत्यस्मिन् अकारो(1) न लुप्यते। गर्भो अस्योषधीनां। सन्नद्धो असि वोढ़यस्व। समिति किं। उपनद्धोऽसुर इति केचिदुदाहरन्ति, तच्चिन्त्यं। धातारातिरित्याद्यन्तःपातित्वाभावात्, असिशब्दादर्शनाच्च। मुख्यन्तु शाखान्तरे विज्ञेयं प्रत्युदाहरणं। असि यमो अस्यादित्यः। त्वं भद्रो असि क्रतुः॥

---

1 असीत्यस्मिन्प्रत्ययेऽकार इति इ० मु०।

## यवनह्वपरः स्वरपरेषु ॥ ४ ॥

यकारवकारनकारह्वकारपरोऽकारो लुप्यते, तेषु यकारादिषु स्वरपरेषु सत्सु। हिरण्यशृङ्गो यो अस्य पादाः। वनस्पतेऽव सृजाररराणः। वरेण्योऽनुप्रयाणं। जम्भयन्तोऽहिं(१)। स्वरपरेष्विति किं। शुक्रान्ते अन्यत्। अग्रे अह्नाꣳ हितः॥

## जकारग्नपर उदात्तः ॥ ५ ॥

जकारपरश्च(२) ग्नपरश्च अकार उदात्तो लुप्यते। ओजोऽजायथाः। शुचिः पावक वन्द्योऽग्ने। उदात्त इति किं। न तद्‌माणो अजरः। निधिपतिर्नो अग्निः॥

## मोवचोदधानस्थेपूर्व्वश्च ॥ ६ ॥

ग्नपर इति 'च'कारो ज्ञापयति। मः, वचः, दधानः, स्थे, इत्येवम्पूर्व्वो ग्नपरोऽकारलोपः(३) भवति। यथा, अङ्गिरस्वदच्छेमोग्निं मे, इत्यत्र पदैकदेशग्रहणं सङ्क्षेपार्थं। अङ्गिरस्वद्भरिष्यामोऽग्निं। वचोऽग्नये भरता बृहत्। दधानोऽग्निर्होता। सधस्थेऽग्निं पुरीष्यं। अन्वादेशः किमर्थः। सधस्थे अध्युत्तरस्मिन्। ग्नपरस्यानुदात्तार्थोयमारम्भः(४)॥

---

१ जम्भयन्तोऽह्निं इत्कमिति ग०, इ० मु० च।

२ अकारपर इति ग०, इ० मु० च।

३ ग्नपरोऽनुदात्तोप्यकारलोप इति इ० मु०।

४ ग्नपरस्याकारस्यानुदात्तार्थोयमारम्भ इति इ० मु०। ग्नपरस्यानुदात्तोयमारम्भ इति ग०।

अभ्यावर्त्तिन्नपूपमपिदधाम्यद्यान्वदितिःशर्म्माग्नेर्जि-
ह्वामग्नयःपप्रयोऽस्माकमस्मेधत्ताश्माश्वाश्रुतिरश्यामामार्य-
मस्मत्पाशानस्मिन्यज्ञेऽस्ताव्यथमानाभिद्रोहमधाय्यदोऽथो-
दुग्धाअरिष्टाअरथाअर्चन्त्यन्तरस्यामस्यान्नायाङ्गिरस्वदकरं

॥ ७ ॥

अभ्यावर्त्तिन्, अपूपम्, अपिदधामि, अद्यानु, अदितिः शर्म्म, अग्नेर्जिह्वां, अग्नयःपप्रयः, अस्माकं, अस्मेधत्त, अश्मा, अश्वा श्रुतिः, अश्याम, अमा, अर्य्यमन्, अस्मत्पाशान्, अस्मिन् यज्ञे, अस्ता, अव्यथमाना, अभिद्रोहं, अधायि, अदः, अथो, अदुग्धाः, अरिष्टाः, अरथाः, अर्चन्ति, अन्तरस्यां, अन्नस्य, अन्नाय, अङ्गि-रस्वत्, अकरं, एतेष्वकारो लुप्यते, एकारौकारपूर्वः। यथा, अग्नेऽभ्यावर्त्तिन्। अभ्यावर्त्तिन्निति किं[1]। कामेन कृतो अभ्या-नडकं। भद्रश्लोचेऽपूपन्देव। अग्नेऽपिदधाम्यास्ये। दधामीति किं। वंशा अपि कच आसनि[2]। अनु नोऽद्यानुमतिः। अन्विति किं। प्रतत्ते अद्य शिपिविष्टनाम। अधिब्रवीतु नोऽदितिः शर्म्म यच्छतु। शर्म्मेति किं। यथानो अदितिः करति। अध्व-रश्नोऽग्नेर्जिह्वामभि गृणीतं। जिह्वामिति किं। व्रतादग्ने अग्नेः। ते नोऽग्नयः पप्रयः। पप्रय इति किं। पुरीष्यासो

---

१ आवर्त्तिन्निति किमिति ग०, द० मु० च। २ आसिनीति ग०।

अग्नयः(१)। नरोऽस्माकमिन्द्र। विश्वेऽस्मे धत्त। धत्तेति किं। द्रविणं वाजो अस्मे वाजस्य मा। परिवृङ्धि नोऽश्मा भवतु(२) 'अश्वाश्रुतिः' अश्वा इत्यस्य यत्र यत्र श्रुतिः, तत्र तत्र लोपः। वृषपाण्योऽश्वा रथेभिः। श्रुतिरिति किं। प्रचेतसोऽश्वान्। भरन्तोऽश्वायेव। दीर्घग्रहणेन किं। चषालं ये अश्वयूपाय तक्षति। त्वचन्तो अश्वा वनतां। वाजयन्तोऽश्याम द्युम्नं। पुनस्तेऽमैषां। ये तेऽर्यमन्। तेऽस्मत्पाशान्। पाशानिति किं। अन्यन्ते अस्मत्(३)। यः पिता तेऽस्मिन् यज्ञे। यज्ञ इति किं। ते अस्मिन् जवमादधुः। प्रसितिं द्रूणानोऽस्तासि। मा सुपर्णाऽव्यथमाना। जनेऽभिद्रोहं मनुष्याश्चरामसि। द्रोहमिति किं। बृहस्पते अभिशस्तेः(४)। सुमन्मेऽधायि मन्म(५)। येऽदो रोचने दिवः। मह्यमग्नेऽथो सीद। शूर नोऽनुमोदुग्धाः। पूर्वेऽरिष्टाः स्याम। पवयोऽरथाः(६)। गायत्रिणोऽर्चन्ति(७)। अभिशूशुचोऽन्तरस्यां। अस्यामिति किं। रुक्मो अन्तर्विभाति। येऽचस्य पुराणाः। स्येति किं। त्वष्टा नो अत्र वरिवः(८)। रायस्पोषोऽन्नाय त्वा। पृथिव्याः सधस्थेऽङ्गिरस्वत्। अहन्तेभ्योऽकरं नमः॥

**गाहमानोजायमानोहेतयोमन्यमानोवनस्पतिभ्यःपतेत्रिधस्तपसःस्वधावोभामितोऽग्नयआयोऽध्वर्यंाक्रतोपूर्वः॥८॥**

---

१ अग्नयः प्रावणेभिरिति ग०,इ०मु० च। ५ उपप्रामात् सुमन्मेधायि मन्मे इति

२ अश्मा भवतु नस्तनूरिति इ० मु० । अश्मा इ० मु०।

भवातु इति ग०। ६ ये पवयोऽरथा इति इ० मु०।

३ अस्मत्पन्न इति इ० मु०। ७ गायत्रिणोर्चन्त्यर्कमिति इ० मु०।

४ अभिशस्तेरमुच इति इ० मु०। ८ वरिवः कृणोतु इति ग०।

गाहमानः, जायमानः, हेतयः, मन्यमानः, वनस्पतिभ्यः, पतेस्त्विधः, तपसः, स्वधावः, भामितः, अग्नयः, आयो, अध्वर्यो, क्रतो, इत्येवम्पूर्वोऽकारो लुप्यते। यथा, गाहमानोऽदायः। जायमानोऽक्ना केतुः। हेतयोऽन्यमस्मत्। मन्यमानोऽमर्त्यं। वनस्पतिभ्योऽधिसम्भृतां। वनस्पतीति किं। नमः पिपलभ्यो अभि। अन्नपतेऽन्नस्यमिहो अतिस्त्विधोत्यचित्तिं। तपसोऽधिजातः। देव स्वधावोऽमृतस्य धाम। स्वधेति किं। अन्यावो अन्यामवतु। भामितोमित्रस्य([१])। थानग्नयोऽन्वतप्यन्त। उकारस्य वकारविक्रियायां व्यञ्जनपरो नकार इति([२])यवनहनिषेधाभावादलोपे प्राप्ते तदपवादोयं। अग्ने दब्धायोऽशीततनो। अध्वर्योविरपाः३([३])। प्रतक्रतोऽनु ते दायि। अत्र यवनहेत्यादिनैव लोपे सिद्धे पुनरस्य ग्रहणं नियमार्थं। आयोऽध्वर्यो क्रतो इत्येतत्पदत्रयपूर्वाकारस्यैव([४]) लोपः। नत्वितरत्र([५])प्रग्रहपूर्वस्येति। यथा, इमे आश्विना संवत्सरः॥

## तस्मिन्ननुदात्ते पूर्व उदात्तः स्वरितं॥ ९॥

यमधिकृत्यायं प्रबन्ध उक्तः, तस्मिन्नकारानुदात्ते([६]) लुप्ते सति पूर्व एकार ओकारो वा उदात्तः स्वरितमापद्यते। यथा, तेऽब्रुवन्। सोऽब्रवीत्॥

---

१ मित्रस्याभिदासत इति ग०, इ० मु० च।

२ नकारपर इति ग०।

३ अध्वर्योविरपा३ इति ग०।

४ इत्येतत्पदत्रयपूर्वस्यैवाकारस्य इति ग०, इ० मु० च।

५ नत्वितरेति इ० मु०।

६ तस्मिन्नकारेनुदात्ते इति ग०, इ० मु० च।

उदात्तं चानुदात्त उदात्तं ॥१०॥

तस्मिन्नेवाकारे उदात्ते लुप्ते[1] पूर्वं एकार ओकारौ वा अनुदात्त उदात्तमापद्यते। यथा, अवरुन्धतेऽन्नं वै। अन्नपतेऽन्नस्य नः॥

स्वरितश्च सर्वत्र स्वरितश्च सर्वत्र ॥११॥

उदात्त इति शब्दो ज्ञापयति चकारः[2]। तस्मिन्नकारे उदात्ते लुप्ते सर्वत्र[3] एकार ओकारौ वा स्वरित उदात्तमापद्यते। भेषजं गवेऽश्वाय। ओजोऽजायथाः। सर्वत्रेति वचनान्नित्यस्वरितेष्वपि तथैव तद्विधानं स्यात्। उक्थ्योऽयातिरात्र[4]॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे द्वादशोऽध्यायः॥ * ॥

इति प्रथमः प्रश्नः।

---

१ लुप्ते सतीति ग०, ह० मु० च।

२ चशब्दो ज्ञापयति इति ग०,ह०मु० च।

३ उदात्ते सति सर्वं इति ह० मु०। उदात्ते सति लुप्ते सति सर्वत्रेति ग०।

४ यथोक्थ्योऽयातिरात्र इति ग०,ह० मु० च।

## अथ त्रयोदशोऽध्यायः।



### अथ मकारलोपः॥ १॥

'अथ' इत्ययमधिकारः। मकारस्य लोप(१) उच्यते, इत्येतदधिकृतं वेदितव्यं, इत उत्तरं यद्वक्ष्यामः। मकारस्य लोपः, मकारलोपः॥

### रेफोष्मपरः॥ २॥

रेफपरश्चोष्मपरश्च पदान्तो मकारो लुप्यते। यथा, प्रत्युष्टꣳ रक्षः। सꣳशितं मे ब्रह्म। तꣳ षड्ढानि। सꣳसमिद्युवसे(२)। त्वꣳह यज्ञविश्य। एवम्पर इति किं। इदं वामास्ये। पदान्त इति किं। तस्मात्ताम्रा आपः। रेफश्च ऊष्मा च रेफोष्माणौ, तौ परौ यस्मात् सः, तथोक्तः(३)॥

### यवकारपरश्चैकेषामाचार्याणां॥ ३॥

यकारपरो वकारपरो वा मकारो लुप्यते, इत्येकेषां मतं।

---

१ मकारलोप इति म०, द० मु० च।

२ संसमिद्युवसे वृषन् इति द० मु०।

३ रेफश्च ऊष्माणश्च रेफोष्माणः, ते परे यस्मात् सः, तथोक्त इति द० मु०।

य एवास्य पञ्चमानुवाके(१) सवर्णापत्तिं प्रतिषेधन्ति(२), तेषामेवैष लोप इति विधिरन्वादिशति(३)। चकारः(४) सिंहावलोकनेन। यथा, त्वँ यज्ञेष्वीड्यः। तँ एवा एतँ यजमानः। एवम्पर इति किं। यं कामं कामयते(५)। यकारस्य वकारस्य यकारवकारौ(६) तौ, परौ यस्मात् सः, तथोक्तः। नैतत् सूत्रमिष्टं(७)॥

न सँ सामिति रापरः॥ ४॥

रा इति परः(८) सं, सां, इत्येतयोर्ग्रहणयोर्मकारलोपो न भवति(९)। यथा, प्र सम्राजं। साम्राज्याय सुक्रतुः। सँ सामिति किं। शँ राजन्नोषधीभ्यः। रापर इति किं। सँ रराणः। पदान्तस्य व्यञ्जनपरः प्राकृतः, इति वक्ष्यमाणं द्वित्वनिषेधम् 'इति' शब्दो निवारयति। तस्मादत्र द्वित्वसिद्धिः॥

अथ वर्णानां॥ ५॥

'अथ' इत्ययमधिकारः। वर्णानां संहिता वक्ष्यते, इत्येतदधिकृतं वेदितव्यं। अथवा 'अथ' शब्दः पदसंहितानिषेधकः॥

ऋकारर्कारेरषपूर्वो नकारो णकारँ समानपदे॥ ६॥

समानपदे एकपदे ऋकार ॠकार रेफषकारपूर्वो नका-

---

१ पञ्चमाध्याये इति ग०, ङ० मु० च।
२ प्रतिषेधयन्तीति ङ० मु०।
३ तेषामेवैष लोपविधिरिति तानन्वादिशति इति ग०, ङ० मु० च।
४ चकारः परः इति क०।
५ यं कामयते इति ग०, ङ० मु० च।
६ यवकाराविति ग०, ङ० मु० च।
७ एतत्सूत्रमनिष्टमिति ग०, ङ० मु० च।
८ रा इत्येवम्पर इति ङ०, मु०।
९ मकारो न लुप्यते इति ग०, ङ०, मु० च।

रो णकारमाप्नोति(१)। त्रिभिष्ट्वं देव सवितः (?) जायते। त्वष्टृहोतॄणां। एष वा ऋचो वर्णः। क्षणोसि। एवम्पूर्व इति किं। देवानां वा अन्नं(२)। समानपद इति किं। एभिर्नो अर्कैः। समानञ्च तत् पदञ्च, समानपदं, तस्मिन्॥

## व्यवेतोऽपि॥७॥

उक्तनिमित्तपूर्वो नकारः, अन्येन व्यवेतो व्यवहितोऽपि(३) णत्वमाप्नोति। यथा, अपरश्चुत्तकर्णं दहति। आ रमणं कुरुते(४)। अधिषवणे(५)। क्षमाणः प्रतिष्ठाकामः॥

## हिरण्मयं॥ ८॥

हिरण्मयम् इत्यस्मिन् ग्रहणे नकारो णकारमाप्नोति(६)। यथा, हिरण्मयं दाम दक्षिणा। स्पर्शपर इति वक्ष्यमाणप्रति-षेधस्य(७) प्रतिप्रसवार्थमिदं सूत्रं॥

## पाणि-गण-पुण्य-कण्व-काण-गाण-वाण-वेणु-गुण-मणि-प्रवादेषु पूर्वः॥ ९॥

पाणीत्यादिशब्दानां प्रवादेषु पूर्वतः(८) प्रथमो णकारः

---

१ णकारमापद्यते इति ह० मु०।

२ अन्नं अगमुषामिति ग०, ह० मु० च।

३ व्यवेतोऽपि व्यवहितोपि इति ग०, ह० मु० च।

४ आत्मनेवारमणं कुरुते इति ह० मु०।

५ अधिषवणमिति ह० मु०। अधि-षवणी इति ग०।

६ णत्वमाप्नोतीति ग०, ह० मु० च।

७ वक्ष्यमाणनिषेधस्य इति ग०।

८ पूर्व इति ग०, ह० मु० च।

प्रकृत्यैव वेदितव्यः। प्रकर्षेण वादः प्रवादः। लिङ्गविभक्तिभेद-समासतद्धितादिभिर्निर्दिश्यत इत्यर्थः(१)। यथा, सुपाणिः स्वङ्गुरिः। वृषपाण्योऽश्वाः। हिरण्यपाणिमूतये। गणानान्त्वा गणपतिं(२)। गणा मे मा वितृषन्। गणेन गणं। दूरे अमित्रस्य गणः। पुष्णो भवति वसन्तम् ऋतूनां। सा मा सर्वान् पुण्यान्। कण्वा अभिप्रगायत। तस्मै काणो या(३)। (४)गाणपत्यान्मयोभूरेहि। विश्वस्या बाणवाऽ उत। वेणुर्वैणवो भवति। वेणुना विमिमीते(५)। यद्वेणोः सुषिरं। यथा गुणे गुणं। मणिना रूपाणि नः। ननु गणशब्दप्रवादत्वाद्गाणग्रहणमयुक्तं। मैवं। गणप्रवादे सति(६) तन्नवेत्। किन्तु गणपतिशब्दप्रवादार्थं। पूर्व इति किं। गणानां त्वा, वेणुना वि, मणिना रूपाणि, इत्यादिषूत्तरणकारस्य णत्वं(७) मा भूदिति॥

## पणि-पणिं-वीयमाण-ऊण्योः॥ १०॥

पणीत्यादिषु ग्रहणेषु(८) णकारः प्रकृत्यैव विज्ञेयः(९)। अप्रवादार्थोऽयमारम्भः। अग्ने देवपणिभिः(१०)। पणिं गोषु स्तरामहे। वीयमाणः। तन्स एतं। ऊण्योः कविक्रतु॥

---

१ निर्दिश्य इत्यर्थ इति ग०, इ० मु० च।

२ गणपतिं हवामहे इति ग०, इ०मु०च।

३ याहत इति इ० मु०।

४ चकर्णया कर्णया इति ग, चिह्नित-पुस्तके इ० मु० पुस्तके चाधिकः पाठः।

५ वेणुमाभिमीते इति ग०।

६ गणप्रवादत्वे सतीमि ग०, इ०म०च।

७ इत्यादिषूत्तरस्य णत्वमिति ग०, इ०, मु० च।

८ पणीत्यादिग्रहणेष्विति ग०,इ०मु०च।

९ प्रकृत्यैव वेदितव्य इति ग०,इ० मु०च।

१० पणिभिर्वीयमान इति इ० मु०।

## टवर्गपरः॥ ११॥

टवर्गपरो[१] णकारः प्रकृत्यैव वेदितव्यः। शितिकण्ठाय च[२]। कण्डूयेत पामनं भावुकाः। टवर्गः परो यस्मात् सः, तथोक्तः॥

## चङ्कुण-फणत्-स्थूणो-ह्रिणुयाद्ध्रिणोति-कौणेयोऽणिष्ठा-उल्बणमुगणाश्रुतिसुपुणीका-बाणिजायाणवश्चाट्णार-स्थाणुन्तूणवेवीणायामश्लोणया-पणेत-वाणीः-कल्याणी-कुणपं-वाणः प्रत-श्रोणाश्रुतिर्धाणिका-मेणी॥ १२॥

चङ्कुण, फणत्, स्थूणा, ह्रिणुयात्, ह्रिणोति, कौणेयः, अणिष्ठाः, उल्बणं, उगणाश्रुतिः, सुपुणीका, बाणिजाय, अणवश्च, आट्णार, स्थाणुं, तूणवेवीणायां, अश्लोणया, पणेत, वाणीः, कल्याणी, कुणपं, वाणः प्रत, श्रोणाश्रुतिः, धाणिका, मेणी, एषु णकारः प्रकृत्यैव वेदितव्यः। अवभृथनिचङ्कुण[३]। अन्वापनीफणत्। अयस्थूणावुदितौ। भ्रातृव्याय प्रह्रिणुयात्। एवास्मै प्रह्रिणोति। रजनो वै कौणेयः। येऽणिष्ठास्तान्। यत्र उल्बणं क्रियते। यत्र यत्र श्रुतिः उगणाग्रहणस्य तत्र तत्र णत्वं करणीयं। यथा, अव्याधिनीरुगणा उत। उगणाभ्यस्तृंहतीभ्यः। सुपुणीका नामासि[४]। बाणिजाय कक्षाणां पतये[५]। प्रियङ्गवश्च मेऽणवश्च

---

१ टवर्गे परे इति द० मु०।

२ शितिकण्ठाय स्वाहा इति द०मु०।

३ निचङ्कुण निचेरुरिति द० मु०।

४ वर्षयन्ती सुपुणीकानामासीति द०मु०।

५ मन्त्रिणे बाणिजाय कक्षाणां पतये इति द० मु०।

मे। चेति किं। अनवसे रथं[१]। एतं मे पर आट्णारः। य स्था-णुꣳहन्ति। या तूणवे या वीणायां। अश्रोणया समग्रफया[२]। प्रणेतारो अर्वं। इन्द्रं वाणीरनूषत। कल्याणी रूपसमृद्धा[३]। पुरुषकुणपमश्वकुणपं[४]। वाणः शततन्तुर्भवति। शतेति किं। ऋतावानश्चयमानाः[५]। श्रोणा छृण्णू[६]। श्रुतिरिति किं। श्रोनाय स्वाहा। निजल्गुलीति धाणिका। वनस्पतीनामेणी। मकारेण किं। उभयत एनी स्यात्[७]॥

**अवग्रहो वृषण्-शीर्षण्-ब्रह्मण्वन्-चर्मण्-चर्षण्॥ १३॥**

वृषन्नित्यादिग्रहणेष्ववग्रहो णकारः प्रकृत्यैव विज्ञेयः[८]। वातो अपां वृषण्वान्। शीर्षण्वाभ्यो भवति। ब्रह्मण्वन्तो देवाः[९]। अश्मण्वति स्वाहा। चर्मण्वति स्वाहा। चर्षण्ग्रहणस्य शाखान्तरविज्ञेयमुदाहरणं[१०]। मित्रस्य चर्षणी धृत इति केचिदुदाहरन्ति। तन्न साधुः। अन्तो लोपात्, इति वक्ष्यमाणप्रतिषेध-प्रतिप्रसवार्थमुक्तत्वादेषां ग्रहणानां चर्षणीधृत इत्यत्र णकारस्य पदान्तत्वाभावात्। अथवा ऋकारादिप्राप्तिरत्र[११] णकारो वैकृत

१ अनवसे रथमिति म०।
२ समग्रफया श्रोणाति इति ह० मु०।
३ रूपसमृद्धा सा स्यात् इति ह० मु०।
४ कुणपं गौरिति ह० मु०।
५ चयमाना ऋणानि इति ह० मु०।
६ छृण्णू तृणाशा इति ह० मु०।
७ एनी स्यात्तदाऽङ्करिति ग०,ह० मु० च।
८ प्रकृत्यैव वेदितव्य इति ग०,ह० मु० च।
९ देवा आसन्निति ह० मु०।
१० शाखान्तरे विज्ञेयमुदाहरणमिति ग०, ह० मु० च।
११ ऋकारर्कारेरषादिप्राप्तेरवेति ह०मु०, ऋकारर्कारेरषादिप्राप्ते तत्रेति ग०।

इति शङ्कानिराकरणार्थमेतानि ग्रहणानीत्यन्ये मन्यन्ते। तथा सति मित्रस्य चर्षणी धृत इत्युदाहरणं रमणीयं। अवग्रह इति किं। वृषवन्मे विश्वान्यर्य्य आ। तस्मात् सप्तशीर्षन्। ब्रह्मन्विप्रश्चि। अघवमीमदन्त। पशूनाञ्शर्मन्। अवग्रहस्थोऽवग्रह इति लक्ष्यते(१)॥

ऋष्ण,षण्ण,ष्णाम,रावण चेति प्राकृताः॥ १४॥

अत्र सूत्रे एते पदैकदेशा बहुपादानार्थमुक्ताः। ऋष्णादिष्वेषु च णकारः प्राकृत एव विज्ञेयः(२)। स्वयमातृष्णामुप। असंतृष्णे हि हनू। स्वयमातृष्णा ज्योतिः। अभिषण्णो यस्मात्। निषण्णाय स्वाहा। दशमासा निषण्णा आसन्। पूष्णो रट्यै(३)। पूष्णा सयुजा(४)। पूष्णे प्रपथ्याय(५)। अर्य्यम्णे चरुं(६)। दधिक्रावणः(७)। ग्रावाणः। प्राकृतशब्दोयं पाण्यादिष्वेव चर्म्मण्पर्य्यन्तेषु(८) मुख्यः। चतसृषु संहितासु णत्वसद्भावात्। ऋष्णेत्यादिषु तु न मुख्यः। किन्तु प्राप्त्यभावेपि णत्वप्रापणार्थः। तथाहि, ऋष्णादौ पूर्वणकारस्य समपदत्वान्निषेधः, उत्तरस्य सवर्गीयव्यवहितत्वात्(९)। ष्णाम्णग्रहणयोस्तलोपा-

---

१ वक्ष्यते इति क०।

२ णकाराः प्राकृता एव ज्ञेया इति ग०।

३ पूष्णो रंह्यै इति ग०, इ०मु० च।

४ सयुजा सह इति इ० मु०।

५ पूष्णे प्रपथ्याय स्वाहा इति ग०, इ० मु० च।

६ चरुं निर्वपेदिति ग०।

७ दधिक्रावणो णकारियमिति ग०।

८ चर्म्मण पर्यन्तेषु इति ग०,इ०मु० च।

९ इतरस्य उत्तमस्य टवर्गव्यवहितत्वादिति इ० मु०।

